

SAPTHAGIRI (SANSKRIT)
SPIRITUAL ILLUSTRATED MONTHLY
Volume:10, Issue: 01
April-2023, Price Rs.20/-
No. of pages-24

तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका

एप्रिल् २०२३

ओण्टिमिट्ट, श्रीकोदण्डरामस्वामिनः कळयाणोत्सवः

05-04-2023

## तिरुमलतिरुपतिदेवस्थानानि

## 2023 फिब्रवरि 11 तः 19 पर्यन्तम् आयोजित

# श्रीकळ्याण वेङ्कटेश्वरस्वामिनः(श्रीनिवासमङ्गापुरम्) ब्रह्मोत्सव दृश्यानि









## 2023 फिब्रवरि 11 तः 20 पर्यन्तम् आयोजित

# श्री कपिलेश्वरस्वामिनः(तिरुपति) ब्रह्मोत्सव दृश्यानि

















## गीतामृतम्



अर्जुन उवाच -

गुरूनहत्वा हि महानुभावान् श्रेयो भोक्तुं भैक्ष्यमपीह लोके।
हत्वार्थ कामांस्तु गुरूनिहैव भुञ्जीय भोगान् रुधिरप्रदिग्धान्।।

(भगवद्गीता २-५)

भावः - महान् आचार्याणां वधः शुभः। भिक्षाटनं वरं हत्वा रक्तराजकीयं भोक्तुं च।

## सङ्कीर्तनम्



न तु मम तास(?)न्मानस्त्वदीय
नितान्तहित सरणिं नमामि ।।न तु।
न वदतु भवान् जनार्दन घनरति
विवाद वचनं वृथा वृथा
तव मृदुवेदसुधामयवचनै
र्विविधा वशपदवीं वहामि ।।न तु।।
न भजतु मां करुणानिधे भव
त्रिभुवनसुखकर दिव्यरूप ते
प्रभुतया पराभवं भजामि ।।न तु।।
न चलतु वेङ्कटनाथ मां विना
विचरणमपि ते वृथा वृथा
सुचरित्रस्त्वं सुभगस्त्वं त्वां
कुचयोः पुलकाङ्कुरैर्धरामि ।।न तु।।

(अन्नमाचार्यसङ्कीर्तनम्)





# पुष्करमाहात्म्यम्

पञ्चभूतानाम् एकं जलं, तत् पुष्करम् इति नाम्ना व्यवाह्रयते। ''पोषयतीति पुष्करं'' नाम पोषयति इति अर्थः। अस्य अन्यः उत्पत्त्यर्थः अपि अस्ति, ''पोषयतीति पुष्णातीति पुष्करं'' नाम पोषयति, पुष्णाति इति। पुष्करकाल अन्त्यसमयपर्यन्तं विविधाः जीवाः स्वस्य व्रतान्, ध्यानादीन् कुर्वन्तीति दृढविश्वासः। एतस्मिन् समये एव मनुष्याः त्रिषवण स्नानम् आचरन्ति इति, चातकपक्षीः आहारं विना कठोर उपवासव्रतम् आचरतीति, गिरिगुहासु स्थिताः मृगाः अपि व्रतकर्मणि कुर्वन्तीति, बकाः नित्यध्यानं कुर्वन्तीति शास्त्राणि वदन्ति। दक्षिणभारतदेशे गोदावरी, कृष्णा, नर्मदा, कावेरी नद्यः प्रसिद्धाः भवन्ति।

एकैकस्यां राश्यां गुरुप्रवेशसमये एकैक नद्याः पुष्कराणि प्रचलन्ति। अतः द्वादशनद्यः पुष्करनद्यः इति वदन्ति। नवग्रहेषु एकः गुरुः वर्षस्य एकवारं द्वादश राशिषु भ्रमति। चान्द्रमानरीत्या गुरुः मेषराश्यां प्रविशति चेत् गङ्गानद्याः गुरुः वृषभराश्यां प्रविशति चेत् नर्मदानद्याः कर्काटकराश्यां प्रविशति चेत् सरस्वतीनद्याः सिंहराश्यां प्रविशाति चेत् गोदावरीनद्याः, कन्याराश्यां प्रविशति चेत् कृष्णानद्याः तुलाराश्यां प्रविशति चेत् कावेरीनद्याः, वृश्चिकराश्यां प्रविशति चेत् भीमरनद्याः कुम्भराश्यां प्रविशति चेत् सिन्धू नद्याः, मीनराश्यां प्रविशति चेत् प्रणीता नद्याः पुष्करापि आगच्छन्ति। एताः द्वादशनद्यः जीवनद्यः भवन्ति। एवं प्रकारेण एकैकराशेः एकैका पुण्यनदी अधिष्ठान भवति। तस्मिन् पुष्करसमये सर्वदेवताः आगत्य तिष्ठन्ति। अतः तस्मिन् समये तां चेत् सर्वदेवता सान्निध्यम् अस्माकं प्राप्नोति इति विश्वासः।

**गङ्गापुष्कराः : -** बृहस्पतिः मेषराश्यां यदा प्रविशति तदा गङ्गापुष्कराः प्रचलन्ति इति विषयं पुष्करशास्त्रे अस्ति। एष पुष्करसमय महान् पुण्यप्रदः समयः। अस्मिन् समये समस्त पवित्र तीर्थानि गंगानद्यां मिलित्वा स्थास्यन्ति इति दृढविश्वासः भवति। अस्मिन् पवित्रसमये गङ्गायाः समीपं त्रिमूर्तयः, इन्द्रादिदेवताः, सप्तऋषयः, पितृदेवताः, सर्वदेवताः, एकं पर्वकालं समाप्तिपर्यन्तं तत्रैव पुष्करस्नानस्य निवासं कृत्वा तिष्ठन्ति इति ऐतिह्यम्। अस्मिन् वर्षे एप्रिल् २२ तः मे ५ पर्यन्तं गंगापुष्करोत्सवः प्रचलति।

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



तिरुमल-तिरुपतिदेवस्थानानां सचित्रमासपत्रिका
आध्यत्मिकसचित्रमासपत्रिका

# एप्रिल् २०२३

सम्पुटिः-१० सञ्चिका-०१

श्रीशोभकृत्संवत्सरस्य चैत्रशुक्लएकादशि तः
श्रीशोभकृत्संवत्सरस्य वैशाखशुक्लदशमीपर्यन्तम् - १९४४



गौरवसम्पादकः:-
श्री ए.वी.धर्मारेड्डि I.D.E.S.,
कार्यनिर्वहणाधिकारी (F.A.C.), ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी,
ति.ति.दे.मुद्रणालयः,
तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.

मुखचित्रम् - श्रीकोदण्डरामस्वामिनः कळ्याणोत्सवः, ओण्टिमिट्ट।
अन्तिमरक्षापुटः - गङ्गादेव्याः हारती।



**सङ्केतः**
प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org

एका पत्रिका : रू.२०/-
वार्षिकग्राहकत्वम् रू.२४०/-
आजीविक ग्राहकत्वम् रू.२४००/-

# स्वर्धुनी झङ्कारः



- श्री आर्.अनन्तकृष्ण शर्मा
चरवाणी - ८९७८५८७७५१

गङ्गा पुष्करं नाम द्वादश वर्षस्य एकवारम् आयोजमान पर्वदिनम्। यदा देवगुरुः बृहस्पतिः सूर्यसहित मेषराशौ प्रविशति तदा गङ्गापुष्करकालः इति दैवज्ञाः निर्णीतवनन्तः। साधारणतया पुष्करकालः एकवर्षात्मकः परं पुष्करस्य आरम्भद्वादश दिनानि आदिपुष्करमिति, अन्तिम द्वादश दिनानि अन्त्यपुष्करमिति व्यावहरन्ति। आवर्षे प्रथम अन्तिम द्वाद्वश दिनानि अत्यन्त मुख्यभूतानि। देवगुरुः बृहस्पतिः पुष्करेण साकं सकल त्रयस्त्रिंशत् कोट्यात्मक देवैस्सह विश्वे स्थित सकल तीर्थाभिमानिनः देवाः अपि अस्मिन् समये गङ्गा सान्निध्ये वसन्ति इति एतदर्थं ये एतेषु आदि अन्तिम द्वादश दिनेषु गङ्गा नद्यां स्नानमाचरन्ति तेषां कृते समस्त तीर्थावगाहन पुण्यं इति दैवज्ञाः कथयन्ति। एतदर्थं विश्वे स्थित आस्तिक जनाः सुदूरात् आगम्य गङ्गायां स्नानं कृत्वा पुण्यं प्राप्नुवन्ति। तथैव पितृणां कृते तीर्थ श्राद्धादिकं कृत्वा तेषाम् अनुग्रहमपि प्राप्नुवन्ति।

**गङ्गे गङ्गेति यो ब्रूयात् योजनानां शतैरपि ।**
**मुच्यते सर्वपापेभ्यः विष्णुलोकं स गच्छति।।**

ये सुदूरे स्थित्वापि अशक्ताः भक्त्या मातुः गङ्गायाः स्मरणमाचरन्ति ते सर्वे: माता गङ्गायाः परम कारुणिक अनुग्रहणार्थं गृहे स्थित्वोपि गङ्गास्नानफलं प्राप्नुवन्ति इति वराहपुराण वचनम्।

अधुना नदीषु गङ्गा अत्यन्त पवित्रा। किमर्थं नाम सा विष्णुपादाब्जसम्भूता। वामनपुराणोक्त रीत्या यदा भगवान् लक्ष्मीपतिः वामनरूपेण त्रिलोकाधिपतिं बलिं पादत्रयार्थं अयाचत्। वटुरूपेण पादत्रय कृते। तेन बलिना दत्त दानेन वामनरूपी विष्णुः त्रिविक्रमोऽभूत्। तदा महाविष्णुः एकेन पादेन समस्त ब्रह्माण्डं व्याप्तिं चकार। तदा ब्रह्माण्ड अग्निः विष्णोः पाद नख स्पर्शेन आद्रीभूय गङ्गारूपेण परिणम इति तां गङ्गां चतुर्मुखः स्वीय कमण्डे निक्षिपति इति उक्तिः।

एकदा पुष्करः नामकः शिवभक्तः महोग्ररूपेण ब्रह्मणमुद्दिश्य तपश्चकार। ब्रह्मा प्रत्यक्षोभूत्वा तस्मै एकं वरम् अदात्। तत् किम्? इत्यक्तौ देवगुरुः बृहस्पतिः तथैव खेचर चक्रवर्ती आदित्येन साकं यस्मिन् राशौ स्थितो तदा पुष्करोऽपि तैस्सह स्थित्वा पूरयतु इति वरमदात्। तदारभ्य

भारते एकैकस्मिन् वत्सरे प्रत्येक नद्याः पर्वकालमाचरन्ति। अस्मिन् वर्षे (एप्रियल्) वैशाख मासे आचरन्ति। गङ्गानदी तीरे अनेकानि पुण्यतीर्थानि तथैव आध्यात्मिक केन्द्राणि विराजन्ते। तेषु अत्यन्त मुख्यतम प्रळयकालेपि माहेश्वरस्य त्रिशूलाग्रभागे विराजमाना नगरी काशिका नगरी। अत्र सहस्राधिक स्नानघट्टाः वर्तन्ते। तेषु मुख्यतम घट्टाः मणिकर्णिका, दशाश्वमेध हरिश्चन्द्रादयः।

**देवी सुरेश्वरी भगवति गङ्गे त्रिभुवनतारिणि तरलतरङ्गे।**
**शङ्करमौलिविहारिणि विमले मम मतिरास्तां तव पदकमले।।**



**तव चेन्मातः स्रोतः स्नातः पुनरपि जठरे सोपि न जातः।**
**नरकनिवारिणि जाह्नवि गङ्गे कलुषविनाशिनि महिमोत्तुङ्गे।।**

**रोगं शोकं तापं पापं हर मे भगवति कुमतिकलापम्।**
**त्रिभुवनसारे वसुधाहारे त्वमसि गतिर्मम खलु संसारे।।**

**गङ्गास्तोत्रमिदं भवसारं वाञ्छितफलदं विमलं सारम्।**
**शङ्करसेवक शङ्कर रचितं पठति सुखी तव इति च समाप्तः।।**

एवं रीत्या अनेकेषु पुराणेषु गङ्गायाः स्तोत्रं कृतमस्ति। संस्कृतसाहित्ये वरीयान् पण्डितराज जगन्नाथ कृत गङ्गालहरीस्तोत्रम् अत्यन्त महिमान्वितम्। सर्वाण्यपि गङ्गास्नानसमये ये प्रार्थयन्ति ते अवश्यं विष्णुलोकं प्राप्नुवन्ति इति नात्र संशयः।

।।जयतु जयतु गङ्गामाता।।





## फिब्रवरि २०२३
### लघुप्रश्नोत्तरी समाधानानि

१. १८ सहस्रश्लोकाः
२. ज्ञानवैराग्यौ
३. भक्ति मातुः
४. वैकुण्ठं प्रति
५. तपः शौचः दया च
६.तुङ्गभद्रा नदीतीरे स्थित एकःब्राह्मणः
७. भगवान् श्रीकृष्णः
८. भारत
९. श्रीकृष्ण परमात्मा
१०. नारायणः
११. त्रिगुणातीत स्थितिः तदेव मोक्षः
१२. उपनिषत्
१३. सत्रयागः
१४. नैमिशारण्ये
१५. परमात्मा

पुण्यभूमिः कर्मभूमिः भारतदेशः। अत्र अरण्यभूप्रदेशाः अनेके सन्ति। तेषां नैमिशारण्यं, दण्डकारण्यम् ईदृशप्रदेशाः पुराणवाङ्मये सुप्रसिद्धाः। इतोऽपि तमिळनाडु प्रान्तेपि वेदारण्यम् इति नाम्ना एकः ग्रामः अपि अस्ति। एतेषां त्रयाणां मध्ये नैमिशारण्यम् ऋषीणां मुनीनाम् योगिनामपि निवासस्थानं भवति। तत्रस्थाः मुनयः सर्वे विज्ञानखनयः, विवेकधनाः भवन्ति। धर्मचित्ताः सर्वदा समस्तलोकानां संक्षेमम् इच्छन्ति। तत्रस्थाः शौनकादि मुनयः सूतमहर्षिं गौरवेण दृष्ट्वा तेषाम् अनेकान् सन्देहान् निवृत्तिं कृतवन्तः। सूतमहर्षिः अपि ये सन्देहान् पृच्छन्ति तेषाम् आसक्तिं ज्ञात्वा तेषां सन्देहानां कथारूपेण, वेदपुराण इतिहासानां अन्तरार्थं विपुलतया, मनोहरतया वदिष्यति। एतत् नैमिशारण्ये नित्यं प्रचलितं यज्ञः। एकस्मिन् शुभदिने शौनकादिमुनयः सूतमहर्षिं प्रति : - विद्वन्मणे! युष्माकं प्रवचनेन सनातनधर्मसम्बद्ध विषयाः अनेकाः ज्ञातवन्तः। परन्तु अस्माकं लघुसन्देहः वर्तते, भूलोके महाविष्णुः अर्चावतारमूर्तिरूपेण सामान्यजन संसेव्यमानो भूत्वा १०८ दिव्यदेशेषु अस्ति खलु, तेषां श्रीरङ्गः, श्रीमुष्ण, तोताद्रि, सालग्राम, नैमिश, बदरिकाश्रम, काञ्चीपुरं, वेङ्कटाचलम् इत्यादि अष्टक्षेत्राणि स्वयं व्यक्त क्षेत्राणि इति वदन्ति खिल। तेषां सर्वश्रेष्ठं क्षेत्रं किमिति ज्ञातुम् अस्माकं इच्छा अस्ति। एतेषाम् अष्टक्षेत्राणां आबालगोपालं सेव्यमानं, सेव्यमानजनानां मनोरथसिद्धिप्रदं क्षेत्रं किमिति ज्ञातुम् अस्माकं कौतूहलम्। यूयं दयया तादृशं दिव्यदेशविषयं वदत इति प्रार्थयामः इति उक्तवन्तः। इतोऽपि अर्चावतारमूर्ति सम्बन्धित वृत्तान्ताः अपि भवन्मुखतः शृणुमः इति उक्तवन्तः। सूतः शौनकादि महर्षीन् श्रद्धया दृष्ट्वा तेषां स्थितां जिज्ञासां ज्ञातवान्। अनन्तरं हे तापसाः! अनन्तं देवदेवस्य चरित्र अहम् एकः एव वक्तुं शक्नोमि वा? मम शक्तिः कियत्? श्रीवेदव्यासस्य अव्याजकरुणया मम शक्त्यानुसारं निवेदयामि। भवता उक्तेषु अष्टस्वयंव्यक्त क्षेत्रेषु वेङ्कटाचलः सर्वश्रेष्ठं क्षेत्रम्। तत् क्षेत्रमेव ऐहिकामुष्मिक फलानि प्रसादयति। अत्र किमपि सन्देहः नास्ति।

इतोपि श्वेतवराहकल्पे महाविष्णुः वैकुण्ठं त्यक्त्वा शेषाद्रेः स्थितस्य चित्रवृत्तान्तं युष्माकं वदामि शृण्वन्तु।

- डा।। सि.शिवारेड्डि
चरवाणी - ९४४०८५९८७२



श्रीमन्नारायणस्य नाभीकमलतः चतुर्मुख ब्रह्मा आर्विभूतः। सर्वलोकपालकः स्थितिकारकः विष्णुः तं सृष्टि प्रारम्भं कुरु इति आदिष्टतवान्। क्षणमपि विश्रामं विना स्थावरजङ्गमादीनां सृष्टिः एव ध्येयमिति मत्वा कार्यनिमग्नः अभूत्। एषः सृष्टिभ्रमणकालं यावत् सूर्यः, अग्निः, वायुः, वरुणः सर्वेपि तेषां स्थितिगतीन् क्रमेण कल्पयित्वा अपि तान् रक्षण मार्गान् अपि कल्पितवान्। एतादृशरूपेण सृष्टिकार्यम् अविच्छिन्नतया चतुर्दश मन्वन्तराणि प्रचलितम्। अयं कासः ब्रह्मणः एकः दिवा भवति। अनन्तरं रात्रि प्रारम्भसमये ब्रह्मस्य विश्रान्तिं स्वीकर्तुम् आसक्तिः जाता। निद्रा देवी तम् आह्वाहिता सृष्टिकर्ता ब्रह्मा निद्रामग्नः अभवत्। तदा भूतले महान् परिणामः सम्भत। लोकबान्धवः भानुः स्व तीक्ष्णैः किरणैः स्थावरजङ्गमान् तापितवान्। प्रळयेकाले अकालतांडवं कुर्वतः ज्वाला इव अग्निः महोन्नतशिखैः प्रज्वलितः। ते, ज्वालानां चेतनाचेतनाः कृष्णवर्णाः अभवन्। पुनः अग्नेः वायुः अपि मिलित्वा सप्तवायवः विजृम्भिताः अभवन्। संावर्तकादि मेघाः ध्वनि कान्तियुक्ताः भूत्वा गजतुण्डाः इव धोरैः वर्षधाराः वर्षिताः, तदा सर्वत्र जलं जलम्।

(अनुवर्तिष्यते)

# सप्तगिरयः

- के जि.महेशः
चरवाणी - ९४८०९०२१३१

सप्तगिरीशमाहात्म्यं सपथगिरिवैभवम्।
सप्तश्लोकेषु वक्ष्यामि सप्तजन्मफलप्रदम्।।

वृषभो नाम दैत्येशः श्रद्धया तप आचरत्।
श्रीनिवासः परं तृप्तः वृषभाद्रिः ततोऽभवत्।

अञ्जना मारुतेर्माता तपस्तेपे दृढव्रता।
द्वादशवर्षसाफल्यात् अञ्जनाद्रिः ततोऽभवत्।।



नीलादेवी सदा तुष्टा भक्तानां केशमुण्डनैः।
वेङ्कटेशवरोत्पन्नः नीलाद्रिः तत्र संस्थितः।।

विष्णोः विहारसेवायां विनीतो विहगोत्तमः।
तस्यवाहनसौभाग्यं गरुडाद्रिः ततोऽभवत्।।

शेषः शयनसेवायां लक्ष्मीशं सेवते सदा।
नागेन्द्रस्य नगो रम्यः शेषाद्रिः भक्तपोषकः।।

नारदस्य पराभक्तिर्देवस्य नामकीर्तने।
भक्तिकीर्तनसङ्केतो नारायणाद्रिः पुण्यदः।।

सुवर्णशिखरं रम्यं वेङ्कटेशस्य मन्दिरम्।
यस्मिन् विराजते श्रेष्ठः वेङ्कटाद्रिः सुभाग्यदः।।



# तिरुमलतिरुपतिदेवस्थानानि

## प्रदर्शमान



सप्तगिरेरुपरि भवतां आदराभिमानम् अनन्य समान्यम् ति.ति.दे.
पाठकानां मध्ये वारधि इव विराजमान सप्तवर्ण आध्यात्मिक सचित्र मास पत्रिका

## सप्तगिरि पत्रिकायाः मूल्ये परिवर्तनम्।

भवतां गृहं प्रति एव श्रीनिवासस्य आगमनानुभूतिः

सप्तगिरि
आध्यात्मिक
सचित्र
मासपत्रिकायाः
कृते
शुल्कं दत्वा



श्रीनिवासस्य
अक्षरप्रसादं
प्रतिमासम्
अनुभूयन्तु



# सप्तगिरिः



**आध्यात्मिक सचित्र मास पत्रिका**

(तेलुगु, तमिळं, कन्नडं, हिन्दी, आङ्ग्लं, संस्कृत भाषाः)

..... शुल्क विशेषाः .....

एक पत्रिका प्रतिः रू/- २०
वार्षिक ग्राहकत्वम् रू/- २४०
आजीविक ग्राहकत्वम् रू/- २४००
(१२ वर्ष पर्यन्तम् एव)

शुल्कस्य परिवर्तनं सेप्टम्बर्, २०२२ तः प्रारम्भः। नूतन ग्राहकानां कृते एव एतद् परिवर्तनं भवति।

सङ्केतः
प्रधान सम्पादकः, ति.ति.दे. प्राङ्गणम् मुद्रणा, के.टि.रोड् - तिरुपतिः - ५१७५०१.
दूरभाषा - ०८७७ - २२६४३६३, २२६४५४३, २२६४३५९




देवि सुरेश्वरि भगवति गङ्गे त्रिभुवनतारिणि तरळतरङ्गे।
शङ्करमौळिविहारिणि विमले मम मतिरास्तां तव पदकमले॥ 1

भागीरथिसुखदायिनि मातस्तव जलमहिमा निगमे ख्यातः।
नाहं जाने तव महिमानं पाहि कृपामयि मामज्ञानम्॥ 2

हरिपदपाद्यतरङ्गिणि गङ्गे हिमविधुमुक्ताधवळतरङ्गे।
दूरीकुरु मम दुष्कृतिभारं कुरु कृपया भवसागरपारम्॥ 3

तव जलममलं येन निपीतं परमपदं खलु तेन गृहीतम्।
मातर्गङ्गे त्वयि यो भक्तः किल तं द्रष्टुं न यमः शक्तः॥ 4

पतितोद्धारिणि जाह्नवि गङ्गे खण्डित गिरिवरमण्डित भङ्गे।
भीष्मजननि हे मुनिवरकन्ये पतितनिवारिणि त्रिभुवन धन्ये॥ 5

कल्पलतामिव फलदां लोके प्रणमति यस्त्वां न पतति शोके।
पारावारविहारिणि गङ्गे विमुखयुवति कृततरलापाङ्गे॥ 6

तव चेन्मातः स्रोतः स्नातः पुनरपि जठरे सोऽपि न जातः।
नरकनिवारिणि जाह्नवि गङ्गे कलुषविनाशिनि महिमोत्तुङ्गे॥ 7

पुनरसदङ्गे पुण्यतरङ्गे जय जय जाह्नवि करुणापाङ्गे।
इन्द्रमुकुटमणिराजितचरणे सुखदे शुभदे भृत्यशरण्ये॥ 8

रोगं शोकं तापं पापं हर मे भगवति कुमतिकलापम्।
त्रिभुवनसारे वसुधाहारे त्वमसि गतिर्मम खलु संसारे॥ 9

अलकानन्दे परमानन्दे कुरु करुणामयि कातरवन्द्ये।
तव तटनिकटे यस्य निवासः खलु वैकुण्ठे तस्य निवासः॥ 10

वरमिह नीरे कमठो मीनः किं वा तीरे शरटः क्षीणः।
अथवाश्वपचो मलिनो दीनस्तव न हि दूरे नृपतिकुलीनः॥ 11

भो भुवनेश्वरि पुण्ये धन्ये देवि द्रवमयि मुनिवरकन्ये।
गङ्गास्तवमिमममलं नित्यं पठति नरो यः स जयति सत्यम्॥ 12

येषां हृदये गङ्गा भक्तिस्तेषां भवति सदा सुखमुक्तिः।
मधुराकन्ता पञ्झटिकाभिः परमानन्दकलितललिताभिः॥ 13

गङ्गास्तोत्रमिदं भवसारं वाञ्छितफलदं विमलं सारम्।
शङ्करसेवक शङ्कर रचितं पठति सुखीः तव इति च समाप्तः॥ 14

॥इति श्रीमच्छङ्कराचार्य विरचितं गङ्गास्तोत्रं सम्पूर्णम्॥

# नामरामायणम्







बालकाण्डम्

01) शुद्धब्रह्मपरात्पर राम।
02) कालात्मक परमेश्वर राम।
03) शेषतल्पसुखनिद्रित राम।
04) ब्रह्माद्यमरप्रार्थित राम।
05) चण्डकिरणकुलमण्डन राम।
06) श्रीमद्दशरथनन्दन राम।
07) कौसल्यासुखवर्धन राम।
08) विश्वामित्रप्रियधन राम।
09) घोरताटकाघातक राम।
10) मारीचादिनिपातक राम।
11) कौशिकमखसंरक्षक राम।
12) श्रीमदहल्योद्धारक राम।
13) गौतममुनिसम्पूजित राम।
14) सुरमुनिवरगणसंस्तुत राम।
15) नाविकधावितमृदुपद राम।
16) मिथिलापुरजनमोहक राम।
17) विदेहमानसरञ्जक राम।
18) त्रयम्बककार्मुकभञ्जक राम।
19) सीतार्पितवरमालिक राम।
20) कृतवैवाहिककौतुक राम।
21) भार्गवदर्पविनाशक राम।
22) श्रीमदयोध्यापालक राम।

अयोध्याकाण्डम्

23) अगणितगुणगणभूषित राम।
24) अवनीतनयाकामित राम।
25) राकाचन्द्रसमानन राम।
26) पितृवाक्याश्रितकानन राम।
27) प्रियगुहविनिवेदितपद राम।
28) तत्क्षालितनिजमृदुपद राम।
29) भरद्वाजमुखानन्दक राम।
30) चित्रकूटाद्रिनिकेतन राम।
31) दशरथसन्ततचिन्तित राम।
32) कैकेयीतनयार्थित राम।
33) विरचितनिजपितृकर्मक राम।
34) भरतार्पितनिजपादुक राम।



अरण्यकाण्डम्

35) दण्डकावनजनपावन राम।
36) दुष्टविराधविनाशन राम।
37) शरभङ्गसुतीक्ष्णार्चित राम।
38) अगस्त्यानुग्रहवर्धित राम।
39) गृध्राधिपसंसेवित राम।
40) पञ्चवटीतटसुस्थित राम।
41) शूर्पणखार्तिविधायक राम।
42) खरदूषणमुखसूदक राम।
43) सीताप्रियहरिणानुग राम।
44) मारीचार्तिकृताशुग राम।
45) विनष्टसीतान्वेषक राम।
46) गृध्राधिपगतिदायक राम।
47) शबरीदत्तफलाशन राम।
48) कबन्धबाहुच्छेदन राम।

किष्किन्धाकाण्डम्

49) हनुमत्सेवितनिजपद राम।
50) नतसुग्रीवाभीष्टद राम।
51) गर्वितवालिसंहारक राम।
52) वानरदूतप्रेषक राम।
53) हितकरलक्ष्मणसंयुत राम।

रामायणं नामरामायणमिति अष्टोत्तरशत पादैः विवृत साम्प्रदायक स्तोत्रम्।
अस्य पारायणेन समग्ररामायण पारायणकृत फलसिद्धिः भवतिरिति आर्योक्तिः।
एप्रिल् 26 दिनाङ्के श्रीरामजयन्ति सन्दर्भे सप्तगिरिपाठकानां कृते।



सुन्दरकाण्डम्

54) कपिवरसन्ततसंस्मृत राम।
55) तद्गतिविघ्नध्वंसक राम।
56) सीताप्राणाधारक राम।
57) दुष्टदशाननदूषित राम।
58) शिष्टहनूमद्भूषित राम।
59) सीतावेदितकाकावन राम।
60) कृतचूडामणिदर्शन राम।
61) कपिवरवचनाश्वासित राम।

युद्धकाण्डम्

62) रावणनिधनप्रस्थित राम।
63) वानरसैन्यसमावृत राम।
64) शोषितसरिदीशार्थित राम।
65) विभीषणाभयदायक राम।
66) पर्वतसेतुनिबन्धक राम।
67) कुम्भकर्णशिरच्छेदक राम।
68) राक्षससङ्घविमर्दक राम।
69) अहिमहिरावणचारण राम।
70) संहृतदशमुखरावण राम।
71) विधिभवमुखसुरसंस्तुत राम।
72) खस्थितदशरथवीक्षित राम।
73) सीतादर्शनमोदित राम।
74) अभिषिक्तविभीषणनत राम।
75) पुष्पकयानारोहण राम।
76) भरद्वाजाभिनिषेवण राम।
77) भरतप्राणप्रियकर राम।
78) साकेतपुरीभूषण राम।
79) सकलस्वीयसमानत राम।
80) रत्नलसत्पीठस्थित राम।
81) पट्टाभिषेकालङ्कृत राम।
82) पार्थिवकुलसम्मानित राम।
83) विभीषणार्पितरङ्गक राम।
84) कीशकुलानुग्रहकर राम।
85) सकलजीवसंरक्षक राम।
86) समस्तलोकाधारक राम।



उत्तरकाण्डम्

87) आगतमुनिगणसंस्तुत राम।
88) विश्रुतदशकण्ठोद्भव राम।
89) सीतालिङ्गननिर्वृत राम।
90) नीतिसुरक्षितजनपद राम।
91) विपिनत्याजितजनकज राम।
92) कारितलवणासुरवध राम।
93) स्वर्गतशम्भुकसंस्तुत राम।
94) स्वतनयकुशलवनन्दित राम।
95) अश्वमेधक्रतुदीक्षित राम।
96) कालावेदितसुरपद राम।
97) अयोध्यकजनमुक्तिद राम।
98) विधिमुखविबुधानन्दक राम।
99) तेजोमयनिजरूपक राम।
100) संसृतिबन्धविमोचक राम।
101) धर्मसंस्थापनतत्पर राम।
102) भक्तिपरायणमुक्तिद राम।
103) सर्वचराचरपालक राम।
104) सर्वभवामयवारक राम।
105) वैकुण्ठालयसंस्थित राम।
106) नित्यानन्दपदस्थित राम।
107) राम राम जय राजा राम।
108) राम राम जय सीता राम।।





# तिरुमलतिरुपतिदेवस्थानानि




तिरुमलक्षेत्रे आयोजित श्री अनन्ताळ्वार् अवतारोत्सव(19-02-2023) दृश्यानि।
अस्मिन् उत्सवे तिरुमल श्री श्री श्री पेद्दजीयर्स्वामी, श्री श्री श्री चिन्नजीयर् स्वामी अनुग्रह भाषणं दत्तवन्तौ।




श्री ज्ञान प्रसूनाम्बा श्री काळहस्तीश्वरस्वामिनोः कळ्याणोत्सवस्य (20-02-2023) ति.ति.दे. पक्षतः ति.ति.दे. कार्यनिर्वहणाधिकारी श्री ए.वि.धर्मारेड्डि ऐ.डि.ई.एस्., दम्पती कौशेयवस्त्राणि समर्पितवन्तः। अपि च ति.ति.दे. धर्मकर्तारः मण्डलिअध्यक्षः श्री वै.वि. सुब्बरेड्डि महोदयस्य सतीमणी श्रीमती स्वर्णलता, ति.ति.दे. पालकमण्डलि सदस्यः श्री पोकल अशोक् कुमार् कौशेय वस्त्राणि समर्पितवन्तः।




श्री भ्रमराम्बामल्लिकार्जुनस्वामिनोः (श्रीशैलम्) ब्रह्मोत्सवेषु (14-02-2023) ति.ति.दे. पक्षतः ति.ति.दे. संयुक्त कार्यनिर्वहणाधिकारी श्री वि.वीरब्रह्मम् ऐ.ए.एस्., दम्पती कौशेयवस्त्राणि समर्पितवन्ती।




ति.ति.दे. श्री पद्मावती शिशु हृदयालये द्वितीय हृदयपरिवर्तन शस्त्रचिकित्स जयेन सम्पूर्ण कृत्वा अपूर्व ख्यातिं सम्पादित सन्दर्भे वैद्यवृन्दान् अभिनन्दितवान् (27-02-2023) ति.ति.दे. कार्यनिर्वहणाधिकारी श्री ए.वि.धर्मारेड्डि ऐ.डि.इ.एस्. महोदयः। अस्मिन् कार्यक्रमे ति.ति.दे संयुक्त कार्यनिर्वहणाधिकारिणी श्रीमती सदा भार्गवी ऐ.ए.एस् वैद्यशालायाः डैरेक्टर् डा।। श्रीनाथ रेड्डि इत्यादयाः भागं गृहीतवन्तः।

# प्रस्तुतिः

- कन्दाल लक्ष्मीनारायणः
चरवाणी - ९९८५२३७३५३

(तदनन्तरम्)

मङ्गळाचरणम्

श्लोक१.स्वस्ति शेषगिरिमिस्तभूषणं
विस्तृणीत कमलापति र्मयि।
यं समस्तजगदेक कारणं
लक्ष्मणार्यमुनिराडभाषत।।

सुवर्णसौरभव्याख्या -

वरशेषगिरीश माश्रये विनताशेष जनावन व्रतम्।
तमशेष जनेहितार्थदं प्रथिताशेषगुणालयं हरिम्।।
शेषाद्रीशस्तुतिं प्रीत्या यश्चक्रे भक्तिनिर्भराम्।
तं वन्दे रघुनाथार्यं शास्त्ररत्नाकरं गुरुम्।।
सुवर्णसुमपूर्णाया श्शेषाद्रीशस्तुते र्गुरोः।
करोमि सौरभव्याख्यां तत्प्रसादैकसाधनः।।

सु.सौ.व्याख्या - श्रीमन्तं भगवन्तं स्तव्यं स्तवप्रियं च शेषाद्रीशं स्तोतुकामः कविशाब्दिककेसरी रघुनाथार्यदेशिक आरिप्सिताया श्शेषाद्रीशस्तुतेः निष्प्रत्यूहं परिसमाप्तये तोष्टूय्यमानस्य देवदेवस्य मुखविकासाय परमभक्तानां पाठकानां सकलाभीष्टप्रपूरणाय च ग्रन्थादौ मङ्गलाशासनरूपं मङ्गलाचरणं शास्त्रसिद्धं विधत्ते स्वस्तीत्यादिनाऽऽद्य श्लोकेन।

तात्पर्यम् - जगदाचार्येण रामानुजाचार्येण वेदान्तवेद्यो यः जीवजडात्मकस्य सकलप्रपञ्चस्यापि सर्वविधकारणभूत इति निरूपितः स शेषाचल शिखर भूषणायमानः श्रियः पति वेंङ्कटेशः स्तुतिकर्तुः मम विषये मङ्गलम् अत्यन्तम् आतनोतु।।

शेषगिरिमिस्त भूषणम् - शेषाख्यो गिरिः अथवा शेष एव गिरिः शेषगिरिः। भुवम् अवतितीर्षोः हरेः आज्ञया निवस शय्यासन - स्तो.र.४० इत्यादि प्रकारेण सर्वविधकिङ्करभूतोऽनन्तः भूम्यां पर्वतरूपं दधार। स एव शेषाद्रिरिति ऐतिहासिकी कथा। तस्य मस्तं मूर्धा शिखरम्





इत्यर्थः। भूष्यतेऽनेनेति भूषणम् अलङ्कारः। शेषगिरि शिखरस्य अलङ्कारायमाण इति भावः। भूषणशब्दस्य नित्यक्लीबतया तत्पुरुषस्य परवल्लिङ्गता नियमश्च शेषगिरीत्यादिसमासस्य नपुंसकत्वम्।

**कमलापतिः -** कमला लक्ष्मीः। "कमला श्रीर्हरिप्रिया" इत्यमरः। तस्याः पतिःनाथो नारायणः "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ", अस्येशाना जगतो विष्णुपत्नीं इति हि श्रुतिः। शेषगिरिमस्तभूषणं कमलापतिरिति सामानाधिकरण्येन श्रियः पतिः नारायण एवात्र शेषाद्रौ वेङ्कटेश्वराख्य अर्चारूपेण अवततारेति अवगम्यते। शठकोपमुनिभिश्च सामवेदसारप्रबन्धे "अगलगिल्लेन् इरैयुमेन्रु अलर्मेल्मङ्गै युरैमार्बा.... तिरुवेङ्गडत्ताने" ति.वा.मो. ६.१०.१०.इति वेङ्कडाचलवासो लक्ष्मीनाथ स्संस्तुत - इति स्मरणीयम्। किञ्चात्र कमलापति शब्द प्रयोगात् पुरुषकाररूपिण्या नित्यानपायिन्या श्रीदेव्या समेत एव भगवान् सेव्यमानः तान् अनुगृह्णाति इति सम्प्रदायार्थश्च सङ्गृहीतः।

**मयि -** विषयसप्तम्यन्तं पदम्। स्तोतु मुद्युक्तस्य मम विषये निर्विघ्न परिसमापनाद्यर्थम् अनुग्रहं करोतु इति भावः। मयीति पदस्य विशेषणरहितत्वात् मङ्गलावाप्तौ स्वस्य निरूपायता च व्यज्यते।

**स्वस्ति -** मङ्गलावाप्त्यर्थं कमलापतिः प्रार्थ्यते। "रमा मङ्गलदेवता", इति लक्ष्मीः मङ्गलस्य अधिष्ठातृदेवतात्वेन प्रसिद्धा। तस्या अपि माङ्गल्यकारी "मङ्गलानां च मङ्गल "मिति अभियुक्तैः प्रस्तुतो भगवान् हरिः। अतोऽत्र मङ्गलार्थं स एव प्रार्थ्यते। "भूनायकं वा" इति न्यायेन शुभाश्रयो जनार्दन स्सर्वेषां भक्तानां मङ्गलानि अनुगृह्णातीति तात्पर्यम्।

**समस्त जगदेक कारणम् -** समस्तस्य जगतो लोकस्य एकम् अनन्यं कारणम् इति तथोक्तः। कारणशब्दस्य नित्यक्लीबत्वात् समासस्य नपुंसकत्वम्। नारायण एव चिदचिदात्मकस्य कृत्स्नस्य जगतः उपादानादि सर्वविधकारण भूत इति भगवद्रामानुजाचार्यैः विशिष्टाद्वैतवेदान्तदर्शने सप्रमाणं सविस्तरं च निरूपितम्। "सदेव सोम्येद मग्र आसीत्' छा.६.२.१. आत्मन आकाशः सम्भूतः तै. आनन्द., "यतो वा इमानि भूतानि जायन्ते" तै. भृगु. इत्यादि कारण वाचक श्रुतिषु सत्, ब्रह्म, आत्मादि शब्दैः साधारणतया निर्दिश्यमानं जगत्कारणं" एको ह वै नारायण आसीत्" - महोप-१.१. इत्यादिषु नारायण इति असाधारणतया नामनिर्देशात् गतिसाम्यन्यायेन स एव जगत्कारणमिति ज्ञायते। तथैव तदैक्षत बहुस्याम् प्रजायेय - छा ६.२.३, "तत् सृष्ट्वा तदेवानु प्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत्" - तै आ.६. इत्यादिभिस्स एव जगतः उपादानम्, निमित्तकारणं चेति निरचीयत। तदिदमुक्तं तैः श्रीभाष्य मङ्गलाचरणश्लोके - "अखिल भुवन जन्म स्थेम भङ्गादिलीले .... ब्रह्मणि श्रीनिवासे" इति। तदेवात्र प्रस्तुतं स्तुतिकर्त्रा' लक्ष्मणार्य मुनिराडभाषत' इति। लक्ष्मणार्यो रामानुजाचार्यः। अमोघो लक्ष्मणमुनिः ५ - श्रीरामानुज अष्टोत्तरशतनामस्तोत्रम्।

**अत्रायं विशेषोऽनुसन्धातव्यः -** "वैकुण्ठे तु परे लोके श्रियोसार्धं जगत्पतिः। आस्ते विष्णु रचिन्त्यात्मा भक्तै भागवतैस्सह" इत्युक्तरीत्या वैकुण्ठवासिनः परमपुरुषस्य भगवतो नारायणस्य शय्याभूतः शेषो भूम्यां पर्वतरूपेण स्थित्वा निजशिरोभूषणतया सर्वजन समाश्रयणीयं सर्वाभीष्टप्रदं गोविन्दं धृत्वा तस्य वैभवातिशयं लोके प्रतिपादयतीति प्रसिद्धमेवैतत्। एवम् "पत्युः कमलवासिन्याः प्रेरणात् पृथिवीतले। अहीना मीश्वरस्सोऽय मासीत् रामानुजो मुनिः" इत्युक्तरीत्या शेषावतारभूता रामानुजाचार्याः स्वस्वरूपानुगुण तया परब्रह्मणः श्रीनिवासस्य जगदेककारणत्वं प्रत्यपीपदन्निति अत्र सिद्धान्तस्य ऐतिह्यानुवृत्तिश्च सूचिताऽऽसीत्।

तथा चात्र श्लोके स्तुतिकर्तुः आचार्यवरेण्यस्य विशिष्टाद्वैतसिद्धान्तनिष्ठा सम्प्रदायानुवर्तनम् भक्तिनिर्भरता च अत्यन्तं विलसन्ति। आदौ मङ्गलार्थक स्वस्तिशब्द प्रयोगात् भगवत आचार्यस्य च वैभवस्मरणात् प्रशस्तं मङ्गलमाचरितं भवति।

स्तुतिकर्ता तत्र भवान् आचार्यः प्रत्यहं श्रीवत्सचिह्नमिश्रकर्तृकस्य वरदराजस्तवस्य पारायणशील आसीत्। तत्प्रभावेण तत्रस्थ प्रथम श्लोकस्य "स्वस्ति हस्तिगिरिमस्तशेखर स्सन्तनोतु मयि सन्ततं हरिः" इत्यस्य अत्रानुसरणम् आपतितम् इति निगदितुं शक्यते। तदपि गुरोरस्य सम्प्रदायनिष्ठाकाष्ठां सम्भावयामः। अत्र रथोद्धताख्यं वृत्तं स्वीकृतम् - "रान्नराविह रथोद्धता लगौ" इति तल्लक्षणम्।।

(अनुवर्तिष्यते)

# भागवतस्य महिमा



डा.स्वर्ण साम्बशिवराव्
चरवाणी - ९९८९४९१६००

श्रीकृष्ण भगवान् ब्रह्मदेवाय भागवतस्य महिमानं एवं विशदयति -

१. श्रीमद्भागवतं नाम पुराणं लोकविश्रुतम्।
श्रुणुयाच्छ्रद्धया युक्तो मम सन्तोष कारणम्।।
२. नित्यं भागवतं यस्तु पुराणं पठते नरः।
प्रत्यक्षरं भवत्तेस्य कपिलादानजं फलम्।।
३. श्लोकार्थं श्लोकपादं वा नित्यं भागवतोद्भवम्।
पठते श्रुणुयाद् यस्तु गोसहस्रफलं लभेत्।।
४. यः पठेत् प्रयतो नित्यं श्लोकं भागवतम् सुतः।
अष्टादश पुराणानां फलमाप्नोति मानवः।।
५. नित्यं मम कथा यत्र तत्र तिष्ठति वैष्णवाः।
कलिबाह्या नरास्तेवै येऽर्चयन्ति सदा मम।।

श्रीमद्भागवतपुराणमिति नाम्ना प्रसिद्धस्य अस्य पुराणस्य नित्यं श्रद्धया श्रवणेन अहम् अधिकं सन्तुष्यापि। यः प्रतिदिने भागवतस्य पुराणस्य पठनं करोति, सः तस्मिन् ग्रन्थे एकैकस्य अक्षरस्य एकं कपिलधेनोः दानफलितं प्राप्नोति।

यः श्रद्धया मनसा भागवतस्य श्लोकमेकं पठति चेत् तस्य अष्टादशपुराणानां पठनस्य पुन्यं लभ्यते। यत्र प्रतिदिने मम दिव्याः कथाः आकर्णयेः, यः भागवतस्य पूजां करोति तत्र कलेः प्रभावः न भवेत् अपि च ते सर्वपापैः प्रमुच्यते। तेषां देवताः अपि पूजनं कुर्वन्ति।

"यच्छन्ति वैष्णवे भक्त्या शास्त्रं भागवतं हिये।
कल्पकोटि सहस्राणि मम लोके वसन्ति ते।।"

यः धर्मं, विजयं, पापक्षयं वाञ्छति, सः भागवतपुराणस्य श्रवणं कुर्यात् नित्यं।

श्रीमद्भागवतं पुण्यमायुरारोग्य पुष्ठिदम्।
पठनाच्छ्रवणाद् वापि सर्वपापैः प्रमुच्यते।।
श्लोकं भागवतं चापि श्लोकार्थं पादमेव वा।
लिखितं तिष्ठते यस्य गृहे तस्य वसाम्यहम्।।

इदं पवित्र भागवतम् आयुर्दायम्, आरोग्यं, पुष्टिं च प्रसादयेत्। भागवतस्य पठनेन वा श्रवणेन वा सर्वपापेभ्यः प्रमुच्यते। यस्य गृहे भागवत सम्बन्धित श्लोकमेकं वा अर्धश्लोकं वा लेखिष्यति चेत्, तस्य गृहे सदा वसाम्यहम्।

हे ब्रह्मन् मम दिव्यकथानां वक्तृन् श्रोताशमपि, तेषां श्रवणैः आसक्तिः आनन्दः च ये इच्छन्ति तानहं कदापि न मोचयामि।

श्री कृष्णस्य स्तुतिः -

श्री सच्चिदानन्द घनस्वरूपिणे
कृष्णाय चानन्त सुखभिवर्षिणे।
विश्वोद्भव स्थान निरोधहेतवे
नमो वयं भक्तिरसाप्तयेऽनिशम्।।

श्रीशुकस्य स्तुतिः -

यं प्रवजन्त मनुपेत मपेतकृत्यं
द्वैपायनो विरहकातर आजुहाव।
पुत्रेति तन्मयतया तरवोऽभिनेदु
स्तं सर्वभूत हृदयं मुनिमानतोऽस्मि।।

।।कृष्णं वन्दे जगद्गुरम्।।





# व्यसने मित्रपरीक्षा

- विष्णु शर्मा

अस्ति एकं चम्पकं नाम अरण्यम्। अरण्ये चित्राङ्गो नाम मृगः एकाक्षो नाम काकश्च स्नेहेन निवसतः स्म। एकदा चित्राङ्गः वने भ्रमन् केनापि शृगालेन अवलोकितः। क्षुद्रबुद्धिः नाम सः शृगालः स्वार्थहेतुना मृगेण सह मित्रताम् ऐच्छत्। अस्तङ्गते सवितरि क्षुद्रबुद्धिः मृगेण सह मृगस्य निवासस्थानं गतः। मृगशृगालौ दृष्ट्वा काकोऽवदत्, "सखे चित्राङ्ग! कोऽयं द्वितीयः? मृगः अब्रूत, "जम्बुकोऽयम्। अस्मत्सख्यम् इच्छति।" काकः उपादिशत् "अकस्मादागन्तुना सह मित्रता न युक्ता।" तदाकर्ण्य जम्बूकः सकोपम् आह, "मृगस्य प्रथमदर्शने भवानपि अपरिचितः एव आसीत्। यथायं मृगः मम बन्धुः तथा भवानपि।" मृगः अब्रवीत्, "अलं विवादेन। वयं सर्वे आनन्देन एकत्र निवसामः।" काकेनोक्तम्, "एवमस्तु।" किञ्चित्कालानन्तरं शृगालः मृगम् अवदत्, 'वनेऽस्मिन् एकं सस्यपूर्णक्षेत्रमस्ति। दर्शयामि त्वाम्। तथा कृते मृगः प्रत्यहं तत्र गत्वा सस्यम् अखादत्। तद् दृष्ट्वा एकस्मिन् दिने क्षेत्रपतिना पाशः योजितः। तत्रागतः मृगः पाशैर्बद्धः। सः अचिन्तयत् "इदानीं मित्राण्येव शरणं मम।" दूरात् तत् पश्यन् जम्बूकः मनसि आनन्दितः। सोऽचिन्तयत् "फलितं मे मनोरथम्। इदानीं प्रभूतं भोजनं प्राप्स्यामि।" मृगस्तं दृष्ट्वा अब्रवीत्, "मित्र, छिन्धि तावन्मम बन्धनम्। त्रायस्व माम्।" जम्बूको दूरादेवावदत् "मित्र, दृढोऽयं बन्धः। स्नायुनिर्मितान् पाशानेतान् कथं वा व्रतदिवसे स्पृशामि?" इत्युक्त्वा सः समीपमेव वृक्षस्य पृष्ठतः निभृतं स्थितः। प्रदोषकाले मृगमन्विष्यन् काकस्तत्रोपस्थितः।

मृगं तथाविधं दृष्ट्वा स उवाच, "सखे! किमेतत्?" मृगेणोक्तम्, "सुहृद्वाक्यस्य अनादरात् बद्धोऽहम्। उक्तं च -

सुहृदां हितकामानां यः शृणोति न भाषितम्।
विपत् सन्निहिता तस्य स नरः शत्रुनन्दनः।।"

काकः अब्रूत, "स वञ्चकः कास्ते?" मृगेणोक्तम् "मन्मांसार्थी तिष्ठत्यत्रैव।" काकः उक्तवान् "उपायस्तावत् चिन्तनीयः।"

अथ प्रभाते क्षेत्रपतिर्लगुडहस्तः आगच्छन् काकेनावलोकितः। तमालोक्य काकेनोक्तम् , "सखे मृग, त्वमात्मानं मृतवत्संदर्शय। वातेनोदरं पूरयित्वा पादान्स्तब्धीकृत्य तिष्ठ। यदाहं शब्दं करोमि तदा त्वमुत्थाय सत्वरं पलायिष्यसे।" मृगस्तथैव स्थितः।

क्षेत्रपतिना मृगः आलोकितः उक्तश्च, "ओः! स्वयं मृतोऽसि!" सः मृगं बन्धनात् व्यमुञ्चत्। ततः काकशब्दं श्रुत्वा मृगः सत्वरं पलायितः। तमुद्दिश्य क्षेत्रपतिना क्षिप्तेन लगुडेन शृगालस्तावद् हतः।

चित्रकथा

# भगीरथ प्रयत्नः

तेलुगुमूलम् - डा.कम्पेल्ल रविचन्द्रन्
चित्राणि - तुम्बलि शिवाजी
संस्कृतानुवादः - का. भास्करः
चरवाणी - ८१४३१५०८३३
















भगीरथः अङ्गुष्टोपरि स्थित्वा वायुभक्षणेन एकवर्षात्मक कालं परमेश्वरमुद्दिश्य तपमाचरत्।


भगीरथ! तव इच्छां पूरयामि। अहं गङ्गां मम शिरोपरि धारयामि।


शङ्करः हिमालये स्थित बिन्दुसरोवर समीपे गङ्गां विसृजत्। ततः गङ्गा सप्त रूपैः विदार्य, तेषु एकं भगीरथमनुसर।


मध्ये जह्नुमहर्षि आश्रमात् प्रवाह्य तं तस्यै लीनं कृतवती। महर्षिः कोपेन गङ्गाम् अवपोसयत्।
महर्षे! अहं मम पितृन् उद्धर्तुं गङ्गाम् एतावत् पर्यन्तम् आनीतवान्। भवन्तः तां कृपया विसृजन्तु।


जह्नु महर्षिः गङ्गां विसृजत्। गङ्गा भगीरथम् अनुसृत्य पाताळलोकं प्रति गत्वा षष्टिसहस्र सगराणां भस्मराशोपरि प्रावहत्।


सकलपापहारिणि गङ्गातरङ्गेषु स्नात्वा पापविमुक्तो भूत्वा सगरपुत्राः दिविं प्राप।
स्वस्ति

बा ल वि नो दि नी

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?



प्रदत्तं चित्रपटम् अधोनिर्दिष्टप्रदेशे स्थापयामो वा?





## रसप्रश्नाः

१. अर्जुनस्य पुत्रः कः?

२. श्रीकृष्णः कस्मिन् युगे आसीत्?

३. द्रोणाचार्यस्य पिता कः?

४.नारदस्य वीणायाः नाम किम्?

५.कर्णस्य अपरं नाम किम्?

६. कोणार्क क्षेत्रे कस्य आलयः वर्तते?

(समाधानानि - १. अभिमन्युः २. द्वापर युगे ३. भरद्वाज महामुनिः ४. महती ५. राधेयः६. सूर्यस्य )








(१.पृष्टे उपरि मेघः नास्ति २. पृष्टे पर्वतः न दृश्यते ३. गङ्गायाः हस्ते पुष्पं नास्ति ४.पृष्टे भित्तिः नास्ति ५. महर्षेः वस्त्रे पीतवर्णं नास्ति ६. एका जलधारा न दृश्यते ७.जलधारापेक्षया तृणम् अस्ति।)

ऐदंप्राथम्येन सप्तगिरिमासपत्रिकायां लघुप्रश्नोत्तरी इति स्पर्धाकार्यक्रमः आयोजितः
यत्र एतन्मासीयपत्रिकायां प्रकटितविषयाधारिताः प्रश्नाः भवेयुः। अतः हे बालबालिकाः!
प्रतिमासं इमां पत्रिकां पठित्वा उत्तरदानप्रक्रियायां सक्रियं भागं वहन्ति खलु!

१. गुरुपूर्णिमा कस्य महर्षेः जन्मदिवसः?
२. मण्डोदर्याः पतिः कः?
३. अश्वथाम हतः कुञ्जरः'' इति कः उक्तवान्?
४. श्रीकृष्णस्य माता का?
५. दुर्योधनः कस्य हस्ते मारितः?
६. दुर्योधनस्य पुत्रः कः?
७. सरस्वती देव्याः वीणायाः नाम किम्?
८.शल्यस्य सहोदरी का?
९. सहदेवस्य माता का?
१०. कलकत्ता नगरे कस्याः आलयः वर्तते?
११. विनायकस्य वाहें किम्?
१२. कुशध्वजस्य पुत्री का?
१३. द्रोणाचार्यस्य प्रिय शिष्यः कः?
१४. सत्यवत्याः पुत्रौ कौ?
१५. श्रीरामेण पालित राज्यं किम्?

| समाधानानि |
| --- |
| १. |
| २. |
| ३. |
| ४. |
| ५. |
| ६. |
| ७. |
| ८. |
| ९. |
| १०. |
| ११. |
| १२. |
| १३. |
| १४. |
| १५. |

## नियमावालिः

१. केवलं १० तः १५ वर्षीयाः बालाः हैन्दवाः अत्र भागं ग्रहीतुमर्हन्ति।
२. बालाः पत्रिकापुटे प्रदत्तस्थले समानभाषायाम् एव उत्तरं विलिख्य तत्पत्रं The Chief Editor Office, Sapthagiri, T.T.D. Press Compound, K.T.Road, Tirupati 517507, प्रति २५ दिनाङ्कात् पूर्वं प्रेषयेयुः। प्रतिकृतीः (Xerox) नैव स्वीक्रियन्ते।
३. बालानां पितरौ मासपत्रिकाग्रहीतारः (Subsribers) भवेयुः। तत्र नाम, सङ्केतः, दूरवाणीसङ्ख्या च उत्तरपत्रिकायां देया एव।
४. समाधानेषु त्रुटयः, समीकरणानि च न भवेयुः।
५. सर्वेषां प्रश्नानां समीचीनसमाधानं दत्तवन्तां त्रयाणां बालानां चयनं DIP द्वारा क्रियते।
६. विजेतॄणां नामानि अग्रिममासीय सप्तगिरि पत्रिकायां प्रचुरितानि भवन्ति।
७. Chief Editor कार्यालयीयकार्यकर्तृपुत्रपत्रिकाणां च अत्र अवकाशो नास्ति।
८. अस्य कार्यक्रमस्य समाचारः दूरवाणीद्वारा नैव दीयते।

Subscription Number :
Name :
Mother :
Father :
Address :
Phone Number :


Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road, Tirupati 517 507.
Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.

ति.ति.दे. शिल्पकळाशालायां 2023 पालकमण्डलि अध्यक्षः श्री वै.वि.सुब्बारेड्डि, ति.ति.दे. संयुक्त कार्यनिर्वहणाधिकारिणी श्रीमती सदा भार्गवी, ऐ.ए.एस्., ति.ति.दे,. विद्याशाखाधिकारी श्री भास्कर्रेड्डि ति.ति.दे. शिल्पकळाशालयाः प्राचार्यः श्री वेङ्कटरेड्डि इत्यादयः भागं गृहीतवन्तः।









तिरुपतिस्थ महति कळाक्षेत्रे ति.ति.दे. पुरुष उद्योगिणां जीवनशैलिः, रुग्ण तान् उपरि आयोजित अवगाहना कार्यक्रमे (11-02-2023 तः 13-02-2023 पर्यन्तम्) ति.ति.दे. कार्यनिर्वहणाधिकारी श्री ए.वि.धर्मारेड्डि, ऐ,डि.ई.एस्., ति.ति.दे. संयुक्त कार्यनिर्वहणाधिकारिणी श्रीमती सदा भार्गवी ऐ.ए.एस्., स्विंस् डैरेक्टर् डा।। वि.वेङ्कम्मा, श्री पद्मावती शिशुहृदयालस्य डैरेक्टर् डा।। श्रीनाथ् रेड्डि इत्यादयाः भागं गृहीतवन्तः।












SAPTHAGIRI (SANSKRIT) SPIRITUAL ILLUSTRATED MONTHLY PUBLISHED BY TIRUMALA TIRUPATI DEVASTHANAMS
PRINTING ON 25-03-2023 & posting at Tirupati RMS Regd.with the Registrar of Newspapers for India under RNI No.21138/1970 Postal Regd. No. TRP/154/2021-2023"
LICENCED TO POST WITHOUT PREPAYMENT No.PMGK/RNP/WPP-04(4)/2021-2023"
Posting on 5th of every month.

हरिपदपाद्यतरङ्गिणि! गङ्गे
हिमवधु मुक्ताधवळतरङ्गे!
दूरीकुरु मम दुष्कृतिभारं
कुरु कृपया भवसागरपारम्॥

SIVAPRASAD